अथ

# वेदान्तसारचिन्तामणौ उत्तरभागः

५६. अथेदानीं ब्रह्मण्यारोपितचराचरात्मकसकलप्रपञ्चस्य अपवादोक्तिपुरस्सरं निष्प्रपञ्चप्रत्यगभिन्नब्रह्मज्ञानद्वारा मोक्षोऽभिधीयते। 'अथात आदेशो नेति नेति', 'नेह नानास्ति किञ्चन', 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यादिश्रुतिवाक्यैः ब्रह्मण्यध्यारोपितमखिलप्रपञ्चं निषिध्य यन्निषेधावधिभूतं सच्चिदानन्दस्वरूपमपरिच्छिन्नं ब्रह्म तदात्मत्वेन जानीयात्।

५७. तत्र प्रपञ्चनिषेधो नाम विशुद्धया धिया तस्य प्रविलापनम्। प्रविलापनं च धियः प्रपञ्चविषयकवृत्तिशून्यत्वम्। न चैतावता शून्यवादप्रसङ्ग इति शङ्कनीयम्[1], शून्यस्यापि साक्षित्वात्। तथा च शून्यवादिनोऽपि तदात्मभूतं तदेव ब्रह्मेत्यवगन्तव्यम्। तदेव 'तत्त्वमसि', 'अहं ब्रह्मास्मि' इत्यादिवेदान्तवाक्यैः प्रतिपादितम्। तज्ज्ञानादेव जनिमरणपरम्परारूपसंसारकूपभ्रमणनिवृत्तिः।

५८. तच्च ज्ञानं द्विविधं – परोक्षमपरोक्षं चेति। तत्र सद्गुरुमुखाच्छ्रुतेभ्यः 'सत्यं ज्ञानमनन्तं ब्रह्म', 'विज्ञानमानन्दं ब्रह्म', 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति', 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति, तद् विजिज्ञासस्व तद् ब्रह्मेति', 'सदेव सौम्येदमग्र आसीत्', 'तत्त्वमसि', 'अहं ब्रह्मास्मि' इत्यादि वेदान्तवाक्येभ्यः सच्चिदानन्दस्वरूपमपरिच्छिन्नं सर्वप्राण्यात्मभूतं ब्रह्मास्तीति जायमानं ज्ञानं परोक्षज्ञानमित्युच्यते। तदुक्तम् –

'अस्ति ब्रह्मेति चेद्वेद परोक्षज्ञानमेव तत्।'

1. B. वाच्यम्

इति। तेन परोक्षज्ञानेन संशयभावनानिवृत्तिपूर्वकं सदावरणं निवर्तते। तदा सच्चिदानन्दस्वरूपं ब्रह्मास्ति मम तु न भातीति व्यवह्रियते। अनन्तरं

'देहात्मवत् परात्मत्वबोधो यावद् दृढीभवेत्।
शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम् ॥'

इत्युक्त्या 'आवृत्य सकृदुपदेशात्' इति न्यायवत्या असकृच्छ्रवणसहितेन मननेनासंभावनां निदिध्यासनेन विपरीतभावनां च निवर्तयित्वा, तत्त्वमस्यहं ब्रह्मासीत्यादिवेदान्तमहावाक्योत्थं[1] ब्रह्मात्मैक्योल्लेखि यद्देहात्मविज्ञानवत् ब्रह्मविज्ञानं जायते तदेवापरोक्षज्ञानमित्युच्यते। तदुक्तम् —

'अहं ब्रह्मेति चेद्वेद साक्षात्कारः स उच्यते।'

इति।

तेन ज्ञानेन चिदावरणं निवर्तते। तदा 'ब्रह्मैवाहमस्मि न देहादिकम्' इति व्यवह्रियते।

ततः 'अकर्ताहमभोक्ताहं' इति स्वस्य कर्तृत्वाद्यभावज्ञानेन शोकनिवृत्तिर्भवति। ततः स्वस्य कृतकृत्यताज्ञानेन निरङ्कुशतृप्त्यानन्दाभिव्यक्तिर्भवति। तदा आनन्दावरणं निवर्तते।

६०. तथा चाज्ञानम्, आवरणं, विक्षेपः, परोक्षज्ञानम्, अपरोक्षज्ञानं, शोकनिवृत्तिः, आनन्दावाप्तिश्चेति जीवस्य सप्तावस्थाः[2] सिध्यन्ति। एतासु सप्तावस्थासु[3] अज्ञानावरणविक्षेपाख्यास्तिस्रोवस्थाबन्धहेतवः। तदुक्तम्—

'अज्ञानमावृत्तिस्तद्वत्[4] विक्षेपश्च परोक्षधीः।
अपरोक्षमतिः शोकमोक्षस्तृप्तिर्निरङ्कुशा ॥

---

1. B. ⁰दान्तवा⁰
2. B. समाप्ता⁰
3. B. सुप्ताव⁰
4. B. ⁰मावृतस्त⁰

सप्तावस्था इमाः सन्ति चिदाभासस्य तास्विमौ ।
बन्धमोक्षौ स्थितौ तत्र तिस्रो बन्धकृतस्त्विमाः ॥'

इति ।

६१. ननु तत्त्वमस्यादिवाक्योत्थं यत् ब्रह्मात्मैक्योल्लेखि ज्ञानं तदपरोक्षज्ञानमित्युक्तम्; तन्न संभवति; परोक्षत्वापरोक्षत्वादिविरुद्धधर्मवत्त्वेन तत्त्वंपदार्थयोरैक्यायोगादिति चेन्मैवम्। वाच्यार्थयोर्विरुद्धत्वेऽपि लक्ष्यार्थयोरविरुद्धत्वात् ।

६२. तत्त्वंपदार्थयोः कः पुनर्वाच्यार्थः, कश्च पुनर्लक्ष्यार्थ इति[1] चेदुच्यते — समष्टिदेहत्रयोपाधिकं ब्रह्मचैतन्यं तत्पदस्य वाच्यार्थः। व्यष्टिदेहत्रयोपाधिकं ब्रह्मचैतन्यं त्वंपदस्य वाच्यार्थः। समष्टिदेहत्रयोपाधिपरित्यागेन यत् चिन्मात्रमवशिष्यते तत् तत्पदस्य लक्ष्यार्थः। व्यष्टिदेहत्रयोपाधिपरित्यागेन यत् चिन्मात्रमवशिष्यते तत् त्वंपदस्य लक्ष्यार्थः। अनयोर्ब्रह्मात्मनोरैक्यवाचकस्य वाक्यस्थस्य असिपदस्य उपाध्यंशे समन्वयायोगात् निरूपाधिके तत्त्वंपदलक्ष्ये प्रत्यग्ब्रह्मनाममात्रे समन्वयः सिद्ध्यति। एवं 'अहं ब्रह्मास्मि' इत्यादिमहावाक्यानामपि लक्षणयैव वाक्यार्थो द्रष्टव्यः।

६३. लक्षणा च जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा चेति त्रिविधा। तत्र वाच्यार्थमशेषतः[1] परित्यज्य तत्संबन्धिन्यर्थान्तरे वृत्तिर्जहल्लक्षणा। सा च 'गङ्गायां घोषः प्रतिवसति' इत्यत्र गङ्गापदवाच्यार्थमशेषतः परित्यज्य तत्संबन्धिनि तीरे गङ्गापदस्य स्वीक्रियते। वाच्यार्थापरित्यागेनार्थान्तरे वृत्तिरजहल्लक्षणा। सा च 'शोणो धावति' इत्यत्र वाच्यार्थशोणरूपापरित्यागेन शोणरूपवति शोणपदस्य स्वीक्रियते। विरुद्धैकदेशपरित्यागेन अविरुद्धैकदेशे वृत्तिर्जहदजहल्लक्षणा। सा तु 'सोऽयं देवदत्तः' इत्यत्र

1. B. इतीति
2. B. °मविशे°

विरुद्धतत्कालीनत्वैतत्कालीनत्वपरित्यागेन अविरुद्धदेवदत्तमात्रे यथा स्वीक्रियते एवं 'तत्त्वमसि' इत्यत्रापि तत्त्वंपदयोर्विरुद्धसमष्टिव्यष्टिशरीरत्रयोपाधिपरित्यागेन अविरुद्धचिन्मात्रे स्वीकार्या। इयमेव भागत्यागलक्षणेत्यप्युच्यते[1]। तदुक्तम् –

'तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा।
सोऽयमित्यादिवाक्यस्थपदयोरिव नापरा॥'

इति। तथा च तत्त्वमस्यादिवाक्यं तत्त्वंपदार्थयोस्तादात्म्यप्रतिपादकमिति सिद्धम्। तदुक्तम् –

'तत्त्वमस्यादिवाक्यं च तादात्म्यप्रतिपादने।
लक्ष्यौ[2] तत्त्वंपदार्थौ द्वावुपादाय प्रवर्तते॥'

इति।

६४. ननु तत्त्वमसीति वाक्यं नीलोत्पलयोरिव संसर्गत्वेन जीवब्रह्मणोरैक्यं प्रतिपादयतीति[3] केचिद् वदन्ति। अन्ये तु शुद्धविशिष्टयोरिव अन्योन्यविशिष्टत्वेन समरसीभावत्वमैक्यं प्रतिपादयतीति[3] वदन्ति। अतो न तादात्म्यप्रतिपादकं वाक्यमिति चेन्मैवम्। वाक्यस्याखण्डार्थकत्वेन तादात्म्यप्रतिपादकत्वात्। तदुक्तम् –

'संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः।
अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः॥
प्रत्यग्बोधो य आभाति सोऽद्वयानन्दलक्षणः।

---

1. B. ⁰भागल⁰
2. AB. लक्ष्यं
3. AB. ⁰यन्तीति

अद्वयानन्दरूपश्च[1-] प्रत्यग्बोधैकलक्षणः ॥
इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् ।
अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तदैव हि ॥
तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृणु ।
पूर्णानन्दैकरूपेण[-1] प्रत्यग्बोधोऽवतिष्ठते ॥'

इति ।

६५. तत्त्वमस्यादि वाक्यानामखण्डार्थकत्वं नाम उपाधिभेद-भिन्नार्थैक्यप्रतिपादकत्वम् । तथा च तत्त्वमस्यादिमहावाक्यानामेवापरोक्ष-ज्ञानजनकत्वमिति सिद्धम् । ज्ञानस्य चापरोक्षत्वं प्रतिष्ठितत्वम् । तदुक्तम् –

'आदिमध्यावसानेषु स्वस्य ब्रह्मत्वधीरियम् ।
नैव व्यभिचेरत् तस्मादापरोक्ष्यं प्रतिष्ठितम् ॥'

इति । तथा च ज्ञानार्थिभिः सदा वेदान्तविचार एव कर्तव्यः । तदुक्तम् –

'दद्यान्नावसरं कंचित् कामादीनां मनागपि ।
आ सुप्तेरा मृतेः कालं नयेद् वेदान्तचिन्तया ॥'

इति ।

६६. वेदान्तश्रवणस्य प्रत्यहं कृच्छ्रशीतिफलजनकत्वादपि तस्य अवश्यकर्तव्यता सिद्धा । तदुक्तम् –

'दिने दिने च वेदान्तश्रवणाद् भक्तिसंयुतात् ।
गुरुशुश्रूषया लब्धात् कृच्छ्राशीतिफलं भवेत् ॥'

इति । तस्य श्रवणादेः कदा समाप्तिरिति चेदुच्यते । यदा ब्रह्मात्मै-कत्वसाक्षात्कारो जायते तदैव तस्य समाप्तिः । तदुक्तम् –

'परोक्षा चापरोक्षेति विद्या द्वेधा विचारजा ।
तत्रापरोक्षविद्याप्तौ विचारोऽयं समाप्यते ॥'

इति । तथा च येषां महात्मनां अनेकजन्मसु ब्रह्मार्पणबुद्ध्यानुष्ठितयज्ञ-

1-1. AB. Omit.

दानतपआदिसुकृतपुञ्जवशाद् विविदिषाप्रतिबन्धकपापौघनिवृत्तिपूर्वकं चित्तशुद्धिहेतुकविविदिषाद्वारा अत्यन्तश्रवणतदर्थमनननिदिध्यासनपूर्वकं ब्रह्मात्मैकत्वसाक्षात्कारो जायते त एव जीवन्मुक्ताः। तदुक्तम् –

'ब्रह्मात्मनोः शोधितयोरेकभावावगाहिनी।
निर्विकल्पा च चिन्मात्रा वृत्तिः प्रज्ञेति कथ्यते[1]॥
सा सर्वदा भवेद्यस्य स जीवन्मुक्त इष्यते।'

इति।

६७. ते चतुर्विधाः। ब्रह्मविद् ब्रह्मविद्वरः ब्रह्मविद्वरीयान् ब्रह्मविद्वरिष्ठश्चेति। ते च भिन्नस्वभावाः। तदुक्तम् –

'ब्रह्मविच्चात्मसत्यत्वं विश्वं स्वप्नवदेव च।
नित्यं पश्यति मिथ्येति सोऽयं प्राथमिको मतः॥
अन्तर्मुखतया स्थित्वा निद्रालुरिव लक्ष्यते।
द्वितीयः प्रेक्ष्यते नित्यमेष ब्रह्मविदां वरः॥
पार्श्वस्थबोधितो नित्यमन्नपानपरायणः।
एष ब्रह्मविदां नित्यं वरीयानीति चोच्यते॥
न स्वतः परतो वापि ह्युत्थानं यस्य विद्यते।
सोऽयं ब्रह्मविदां नित्यं वरिष्ठ इति चोच्यते॥
तारतम्येन सर्वेषां चतुर्णां सुखमुत्तमम्।
तुल्या चतुर्णां मुक्तिश्च दृष्टसौख्यं[2] विशिष्यते॥'

इति।

६८. ननु चतुर्णां जीवन्मुक्तत्वाविशेषात् कस्मात्तेषां शीलं भिद्यत इति चेन्मैवम्। तेषां प्रारब्धकर्मणो नानात्वात् शीलमप्यन्यो-

1. B. कल्प्यते
2. B. दुष्ट

न्यविलक्षणं स्यात्। 'अहं ब्रह्म' इत्यनुभवस्तु सर्वेषां समान एव। तदुक्तम् –

'रागी कश्चिद् विरक्तोऽन्यः क्रुद्धोऽन्यः शान्तिमान् परः।
प्रारब्धकर्मनानात्वान्मुक्तानां वर्तनं पृथक्॥'

इति।

६९. ननु ज्ञानवैराग्योपरमाणां परस्परसहायत्वात् कथं ज्ञानिनां रागादिकत्वमिति चेन्मैवम्। तेषां परस्परसहायत्वस्य प्रायिकत्वात्। तदुक्तम् –

'वैराग्यबोधोपरमाः सहायास्ते परस्परम्।
प्रायेण सह वर्तन्ते वियुज्यन्ते क्वचित् क्वचित्॥'

इति।

७०. तत्र वैराग्यादेः को हेतुः, किं स्वरूपं, किं कार्यमिति चेदुच्यते। विषयेषु दोषदर्शनं वैराग्यस्य हेतुः। विषयजिहासैव तस्य स्वरूपम्। भोगेष्वदीनत्वं[1] तस्य कार्यम्। तदुक्तम् –

'दोषदृष्टिर्जिहासा च पुनर्भोगेष्वदीनता।
असाधारणहेत्वाद्या वैराग्यस्य त्रयोऽप्यमी॥'

इति।

श्रवणं मननं निदिध्यासनं चेत्येतत्त्रितयं बोधस्य हेतुः। मिथ्याभूतानात्मप्रपञ्चतिरस्कारेण सत्यभूतब्रह्मात्मकप्रत्यग्वस्तुविवेचनं स्वरूपम्।

---

1. B. भोग्येष्व°

हृदयग्रन्थेः पुनरनुत्पत्तिः तस्य कार्यम् । तदुक्तम्[1] –

'त्रयोऽप्यत्यन्तपक्वाश्चेत् महतस्तपसः फलम् ।
दुरितेन क्वचित् किंचित् कदाचित् प्रतिबद्धयते ॥'

इति ।

७१. एतेषां त्रयाणां मध्ये बोधस्यैव प्राधान्यं, तस्य साक्षान्मोक्षोपयोगित्वम् । वैराग्योपरत्योस्तु बोधोत्पत्तावुपकारित्वम् –

---

1. A & B. record अत्र लिखितव्यमस्ति ।

From the *upakrama* of the para ७० [तत्र वैराग्यादेः कोहेतुः, किं स्वरूपं, किं कार्यमिति चेदुच्यते] it can be expected that the author intends to discuss the three concepts *vairāgya, bodha* and *uparati* separately. The purport of the quotation after the discussion of *bodha*, namely त्रयोऽप्यत्यन्तपक्वाश्चेत् ..........., etc., is to show the absence of invariable concomitance between *vairagya, bodha* and *uparati*. Hence we may guess from the note of the scribes of A & B(अत्र लिखतव्यमस्ति) that there would be a quotation to support the author's elucidation of *bodha*, then his elucidation of *uparati* which might also be positively accompanied by a citation and then his elucidation of the absence of invariable concomitance between them for which the citation त्रयोऽप्यन्तपक्वाश्चेत्...is intended. One may be tempted to guess the omitted text as follows, in the line of the author's style, presuming that the citations are taken from *Pañcadaśī* as elsewhere.

'श्रवणादित्रयं तद्वत्तत्वमिथ्याविवेचनम् ।
पुनर्ग्रन्थेरनुदयो बोधस्यैते त्रयो मताः ॥

(पञ्चदशी, ७.२७९)

इति ।

यमनियमादय उपरतेः हेतुः । जितवृत्तेः निरोधः स्वरूपम् । नैष्कर्म्यं तस्य कार्यम् । तदुक्तम् –

'तत्त्वबोधः प्रधानं स्यात् साक्षान्मोक्षप्रदत्वतः ।
बोधोपकारिणावेतौ वैराग्योपरमावुभौ[1] ॥'

इति । तथा च तत्त्वज्ञानोत्पत्तेः पूर्वं वैराग्योपरत्योरावश्यकत्वं सिद्धम् । अनन्तरं तु वैराग्यादेरभावेऽपि न क्षतिः । येषां न तत्त्वज्ञानमस्ति, किं तु वैराग्योपरती स्तः, तेषां पुण्यलोकावाप्तिमात्रं, न तु मोक्षः । तदुक्तम् —

'वैराग्योपरती पूर्णे बोधस्तु प्रतिबध्यते'[1] ।
यस्य तस्य न मोक्षोऽस्ति पुण्यलोकस्तपोबलात् ॥'

इति । येषां न वैराग्योपरती स्तः किं तु तत्त्वज्ञानमात्रमस्ति तेषां जीवतामपि मुक्तिः । तस्यां दशायां रागादिप्रयुक्तं यद्दुःखं तस्य न नाशोऽस्ति । तदुक्तम् —

'पूर्णे बोधे तदन्यौ द्वौ प्रतिबद्धौ[2] यदा तदा ।
मोक्षो विनिश्चितः किं तु दृष्टदुःखं न नश्यति ॥' इति ।

७२. ननु तत्त्वज्ञानिनामपि रागाद्यभ्युपगमे तेन रागादिना मोक्षः प्रतिबध्यतामिति चेन्मैवम् । तत्त्वज्ञानोत्पत्त्यनन्तरं उत्पन्नरागादेर्व्याध्यादिवदारब्धकर्मफलत्वान्न मुक्तिप्रतिबन्धकत्वम् । तथा च तत्त्वज्ञानमात्रान्मुक्तिरिति सिद्धम् ।

---

यमादिर्धीनिरोधश्च व्यवहारस्य संक्षयः ।
स्युर्हेत्वाद्या उपरतेरित्यसंकर ईरितः ॥ (पञ्चदशी, ७.२८०)

अनेकजन्मार्जितपुण्यपुञ्जपरिपाके त्रयाणां वैराग्यबोधोपरतीनां सद्भावो भवति । अन्यथा तु पूर्वजन्मार्जितेन प्रतिबन्धकपापानुसारेण यस्मिन् कस्मिंश्चित् पुरुषविशेषे यदा कदापि वा त्रयाणां मध्ये कस्यचित् प्रतिबन्धः भवति ।

1. B. ०तिबुध्यते
2. B. ०बुद्धौ

७३. तत्त्वज्ञानोत्पत्तिमार्गश्च द्विविधः – शुकमार्गो वामदेवमार्गश्चेति । तत्र श्रुत्यन्तश्रवणतदर्थमनननिदिध्यासनन्यासेन झटिति मुक्तिप्रदः शुकमार्गः । वामदेवमार्गस्तु यमनियमाद्यष्टाङ्गयोगाभ्यासेन क्रमेण मुक्तिप्रदः । तदुक्तं वराहोपनिषदि –

'शुकश्च वामदेवश्च द्वे सृती देवनिर्मिते ।
शुको विहङ्गमः प्रोक्तो वामदेवः पिपीलिका ॥
अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन वा
महावाक्यविचारेण सांख्ययोगसमाधिना ॥
विदित्वा स्वात्मनो रूपमसंप्रज्ञासमाधितः ।
शुकमार्गेण विरजाः प्रयान्ति परमं पदम् ॥
यमाद्यासनजायासहठाभ्यासात्[1] पुनः पुनः ।
विघ्नबाहुल्यसंजात अणिमादिवशादिह ॥
अलब्ध्वापि फलं सम्यक् पुनर्भूत्वा महाकुले ।
पूर्ववासनयैवायं योगाभ्यासं पुनश्चरन् ॥
अनेकजन्माभ्यासेन वामदेवेन वै पथा ।
सोऽपि मुक्तिं समाप्नोति तद्विष्णोः परमं पदम् ॥
द्वाविमावथ पन्थानौ ब्रह्मप्राप्तिकरौ शिवौ ।
सद्योमुक्तिप्रदश्चैकः क्रममुक्तिप्रदः परः ॥'

इति । अत्र पूर्वोक्तरीत्या शुकमार्गोऽभिहितः ।

७४. इदानीं श्रवणादिना[2] ब्रह्मात्मैकत्वं ज्ञातुमशक्तानां मध्यमाधिकारिणाम् अष्टाङ्गक्रमेण वामदेवमार्गोऽभिधीयते । तत्र योगभेदेन संप्रज्ञाताख्यसमाधिरभिधीयते । तस्यैवाङ्गित्वादस्य[3] चाङ्गान्यष्टौ यमनियमासनप्राणायामप्रत्याहारधारणध्यानसमाध्याख्यानि । तथा च पातञ्जलं

1. A B. °हठन्यासा°
2. B. Omits
3. B. °ञात् तस्य

सूत्रम् – 'यमनियमासनप्राणायामप्रत्याहारधारणध्यानसमाधयोऽष्टावङ्गानि' इति ।

७५. तत्र यमनियमयोः पञ्चसंख्याकत्वमुक्तं योगशास्त्रे । तथा च पातञ्जलं सूत्रम् – 'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः यमाः[1], 'शौचसन्तोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमाः' इति । वराहोपनिषदादौ पुराणेषु च तयोर्दशसंख्याकत्वमुक्तम् ।

'अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम्
क्षमा धृतिर्मिताहारः शौचं चेति यमा दश ॥
तपः सन्तोषमास्तिक्यं दानमीश्वरपूजनम् ।
सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो[2] व्रतम् ॥
एते च नियमाः प्रोक्ताः दशधैव महामते ।'

इति ।

नवविधान्यासनानि । तदुक्तं स्कान्दे –

'स्वस्तिकं गोमुखं पद्मं वीरं सिंहासनं तथा ।
भद्रं मुक्तासनं चैव मयूरासनमेव च ॥
सुखासनसमाख्यं च नवमं मुनिपुङ्गव ।'

इति । एतेषां तु लक्षणानि ग्रन्थविस्तरभयादत्र नोक्तानि ।

रेचकपूरककुम्भकलक्षणाः प्राणनिग्रहोपायाः प्राणायामाः ।

इन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणं प्रत्याहारः । तदुक्तं स्कान्दे –

'इन्द्रियाणां विचरतां येषु येषु स्वभावतः ।
बलादाहरणं तेषां प्रत्याहारः स उच्यते ॥'

---

1. A B. Omit
2. A B. तपो

इति। यमादिप्रत्याहारान्तं योगस्य बहिरङ्गसाधनानि। धारणादित्रयं त्वन्तरङ्गसाधनम्। तथा च पातञ्जलं सूत्रम् – 'त्रयमन्तरङ्गं पूर्वेभ्यः' इति।

नाभीचक्रहृदयनासाग्रादिदेशे संप्रज्ञातसमाधिसिद्धये चित्तस्य स्थिरीकरणं धारणा। तथा च पातञ्जलं सूत्रं – 'देशबन्धश्चित्तस्य धारणा' इति।

यत्र धारणा कृता तत्रैव चित्तवृत्तीनां विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहीकरणं ध्यानम्। तथा च पातञ्जलं सूत्रम् – 'तत्र प्रत्ययैकतानता ध्यानम्' इति।

ध्यानमेव ध्येयाकारमात्रनिर्भासं सत् प्रत्ययात्मकेन रूपेण शून्यमिव यदा भवति तदा समाधिरित्युच्यते। तथा च पातञ्जलं सूत्रम्– 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' इति। उक्तं च –

'ध्यातृध्याने परित्यज्य क्रमाद्ध्येयैकगोचरम्।
निवातदीपवच्चित्तं समाधिरभिधीयते ॥'

इति[3]। अत एवायं संप्रज्ञातसमाधिरुच्यते।

७६. तथा च धारणाध्यानसमाधीनामियान् भेदः – विजातीयवृत्तिविच्छिन्ना धारणा; अविच्छिन्नं सद् ध्यातृध्यानध्येयस्फूर्तिमद् ध्यानं; ध्येयमात्रस्फूर्तिमान् संप्रज्ञातसमाधिः इति। ध्येयस्फूर्तिशून्योऽसंप्रज्ञातसमाधिः। स एव योगशब्देनाभिधीयते; 'योगश्चित्तवृत्तिनिरोध' इति सूत्रकृता भगवत्पतञ्जलिना सर्वासां चित्तवृत्तीनां निरोधस्यैव योगशब्दार्थतयोक्तत्वत्। ननु वृत्तिनिरोधे चित्तवृत्तिस्वभावस्य द्रष्टुः पुरुषस्य कथं स्थितिरिति चेन्मैवम्। यदा सवृत्तीनां निरोधः तदा द्रष्टुश्चिदात्मनः

---

3. B. Omits

स्वाभाविकचैतन्यरूपेऽवस्थितिसंभवात् । तथा च पातञ्जलं सूत्रम् – 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' इति । उक्तं च –

'ज्ञातृज्ञानज्ञेयभेदः[1] परे नात्मनि विद्यते ।
चिदानन्दैकरूपत्वाद् दीप्यते स्वयमेव तत् ॥'

इति ।

७७. एवं च सति समाधिसुषुप्त्योरभेदशङ्का न कर्तव्या । उभयत्र प्रत्याहारे समानेऽपि वृत्तिसद्भावासद्भावाभ्यां तयोर्भेदोपपत्तेः । तदुक्तम् –

'अलीनत्वान्न निद्रैषा ततो देहोऽपि नो पतेत् ।'

इति ।

७८. अयमेव तत्त्वमस्यादिमहावाक्योत्थायां ब्रह्मात्मैक्योल्लेखिन्यामखण्डाकारवृत्तौ पर्यवस्यति । तदुक्तम् –

'समाधिः संविदुत्पत्तिः परजीवैकतां प्रति ।'

इति । अयमेव ब्रह्मात्मैकत्वसाक्षात्कार इति, ब्रह्मविद्येति, स्वानुभव इति, निर्विकल्पकसमाधिरित्यपि विद्वद्भिः व्यवह्रियते । अयमेव ब्रह्मानन्दस्यापि निश्चायकः । तदुक्तम् –

'यद्यप्यसौ चिरं कालं समाधिर्दुर्लभो नृणाम् ।
तथापि क्षणिको ब्रह्मानन्दं निश्चाययत्यसौ ।'

इति ।

७९. अस्य समाधेरुत्पत्तौ लयविक्षेपकषायरसास्वादलक्षणाः चत्वारो विघ्नाः संभवन्ति । तत्र लयो नामाखण्डार्थवस्त्वनवलम्बनेन चित्तवृत्तेर्निद्रा । विक्षेपो नामाखण्डार्थवस्त्वनवलम्बनेन चित्तवृत्तेः विषयान्तरावलम्बनम् ।

1. B. °तृज्ञेय°

कषायो नाम चित्तवृत्तेः रागादिवासनया स्तब्धीभावः। रसास्वादो नाम समाध्यारम्भसमये उपशमानन्दास्वादः। एतद्विघ्नचतुष्टयं यथा न भवेत् तथा निवातस्थितदीपवत्[1] चित्तमलङ्कुर्यात्।

८०. एवं दृढीकृते समाधौ तद्बलेन वासनायां निश्शेषेण[2] विनष्टायां तत्त्वमस्यादिमहावाक्यं करतलामलकवद् ब्रह्मात्मैकत्वज्ञानमपरोक्षं जनयति। सा च वासना त्रिविधा। लोकवासना, देहवासना, शास्त्रवासना चेति। तत्राद्या लौकिकजनसंमतव्यवहारवासना। द्वितीया अनात्मनि देहादौ आत्मवासना। तृतीया त्वनात्मप्रतिपादकशास्त्राभ्यासवासना। एताः त्रिविधा अपि वासनाः ब्रह्मात्मैकत्वविज्ञानोत्पत्तिप्रतिबन्धकीभूताः। तदुक्तम्—

'कुतर्कवासना लोकवासना शास्त्रवासना।
पुत्रमित्रकलत्रादौ वासना चार्थवासना॥
देहेन्द्रियमनोबुद्धिप्राणादावात्मवासना।
पाण्डित्यवासना भोगवासना कान्तिवासना॥
परमाद्वैतविज्ञानजन्मनः प्रतिबन्धकृत्।'

इति। तथा च मुमुक्षुभिरेता वासनाः परित्यज्य ब्रह्मात्मैकत्वज्ञानदार्ढ्यं[3] यथा भवेत्तथा कर्तव्यम्। तदुक्तम्—

'तस्मान्मुमुक्षुः श्रद्धावान् वासनामखिलामिमाम्।
विसृज्य परमाद्वैतज्ञाननिष्ठो भवेत् सदा॥'

इति।

---

1. B. °तस्थदी°
2. B. °श्शेषतो
3. B. °त्वदा°

८१. ननु प्रपञ्चवासनापरित्यागे[1] कथं तस्य देहधारणमिति[2] चेन्मैवम् ।

'शारीरं केवलं कर्म कुर्वन् नाप्नोति किल्बिषम् ।'

इति स्मृत्या शरीरयात्रामात्रस्य सर्वैरङ्गीकृतत्वात् । अप्राप्तप्रापणप्राप्तसंरक्षणरूप-योगक्षेमधारणस्य भगवदायत्तत्वाच्च । तदुक्तम् –

'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥'

इति ।

८२. अत्र वामदेवमार्गे प्रवृत्तस्य[3] मध्ये आन्तरालिकाः सिद्धयोऽपि संभवन्ति । कथं तत्संभव इति चेदुच्यते । धारणा ध्यानं समाधिश्चेति एतत्त्रितयमेकविषयकं सत् संयमसंज्ञं भवति । तस्य संयमस्य योगशास्त्रोक्त-बाह्याध्यात्मिकभूतिषु तत्र तत्र स्थिरीकरणान्मधुप्रतीकसंज्ञाः सिद्धयो नानाविधाः संभवन्ति[4] ।

८३. काः ताः सिद्धय इति चेदुच्यन्ते – चक्षुरादिप्रमाण-मनपेक्ष्य योगिनोऽतीतानागतवर्तमानवस्तुपरिज्ञानमेका सिद्धिः । पशुपक्ष्यादि-सर्वप्राणिनि तज्ज्ञानमपरा सिद्धिः । स्वीयपरकीयपूर्वजन्मपरम्पराज्ञानमन्या सिद्धिः । परकीयचित्तमात्रमज्ञानं तु अविषयकचित्तज्ञानमितीतरा सिद्धिः । तथा योगिनः स्वदेहस्य परचक्षुर्जन्यज्ञानाविषयत्वरूपान्तर्द्धानं काचित् सिद्धिः । तथा परश्रोत्राद्यग्राह्यत्वं काचित् सिद्धिः । आयुषोऽवसानज्ञानं काचित् सिद्धिः । मैत्रकरुणामुदितानां वीर्यवत्त्वं काचित् सिद्धिः । हस्ति-

1. B. ⁰त्यागेन
2. B. ⁰देहादिधा⁰
3. B. प्रवक्तस्य
4. B. भवन्ति

हनुमद्गरुडतुल्यबलप्रादुर्भावः काचित् सिद्धिः। सूक्ष्मपरमाण्वादिविषयकं, व्यवहितनिध्यादिविषयकं, विप्रकृष्टमेर्वन्तर्वर्तिरसायनादिविषयकं च ज्ञानं काचित् सिद्धिः। चतुर्दशभुवनज्ञानं काचित् सिद्धिः। नक्षत्रसन्निवेश-विशेषज्ञानं[1] काचित् सिद्धिः। इयं तारा अनेन ग्रहेण सह अनेन पथा एतावन्तं कालं गच्छतीति नक्षत्रगतिज्ञानं काचित् सिद्धिः। एतावता धर्मलक्षणावस्थारूपपरिणामत्रयादिभ्रुवान्तबाह्यभूमिषु संयमात् जायमानाः सिद्धय उक्ताः।

८४. इदानीं अध्यात्मिकभूमिषु तत्र संयमात् जायमानाः सिद्धय उच्यन्ते। तत्र वातपित्तश्लेष्माणां त्रयाणां दोषाणां त्वग्रुधिरमांसस्नाय्वस्थि-मज्जाशुक्लानां सप्तानां धातूनां पूर्वं पूर्वं बाह्यमिति देहसन्निवेशज्ञानं काचित् सिद्धिः। जिह्वामूलतोऽधस्तात् कण्ठस्य कूपाकारप्रदेशः, तत्र संयमात् क्षुत्पिपासानिवृत्तिः काचित् सिद्धिः। चित्तस्थैर्यं काचित् सिद्धिः। अदृश्यसिद्धदर्शनं काचित् सिद्धिः। योगिनः सर्वज्ञत्वं काचित् सिद्धिः। स्वासनस्य चितस्य संविदुत्पत्तिः काचित् सिद्धिः।

८५. बिम्बभूतचिन्मात्रे पुरुषे संयमात् पुरुषसाक्षात्कारः सिद्ध्यति। तत्र पुरुषसाक्षात्कारे यतमानस्य योगिनः तत्साक्षात्कारात् पूर्वं योगजशक्य-धर्मानुगृहीतेन मनोमात्रेण प्रातिभसंज्ञं सर्वगोचरज्ञानं भवति। इन्द्रियाणां श्रोत्रादीनां दिव्यशब्दरूपरसगन्धग्राहकत्वं भवति[2]। ते च प्रातिभादयः पुरुषसाक्षात्कारे यतमानस्य विघ्ना भवेयुः। तदुक्तं योगभाष्यकृता भगवता व्यासेन – 'ते प्रातिभादयः पुरुषदर्शने समाहितचित्तस्य उत्पद्यमाना उपसर्गाः' इति। अतो न मोक्षार्थी तानपेक्षते।

८६. पूर्वं संयमस्य ज्ञानरूपाः सिद्धय उक्ताः। क्रियारूपाः सिद्धय उच्यन्ते – तत्र परकीयशरीरे जीवति मृते वा सेन्द्रियस्य चित्तस्य

1. B. सन्नक्षत्र°
2. B. संभ°

प्रवेशः काचित् सिद्धिः। जलपङ्ककण्टकादीनामुपर्यासनं गगनगमनं स्वेच्छामरणं च काचित् सिद्धिः। नाभिनिकटस्थाग्नेः ज्वलनं काचित् सिद्धिः। दिव्यैः श्रोत्रादीन्द्रियैः दिव्यशब्दादिग्रहणं काचित् सिद्धिः। आकाशगमनं काचित् सिद्धिः। प्रकाशात्मकसत्वस्य क्लेशकर्मविपाकरूपं यदावरणं तस्य क्षयः काचित् सिद्धिः। आकाशादिपञ्चभूतानां योगिसंकल्पानुसारित्वं काचित् सिद्धिः। ततो अणिमा महिमा गरिमा लघिमा प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चेति अष्टमहाविभूतयः काश्चित् सिद्धयः। तत्र अणिमाणुतुल्यत्वम्। महिमा व्यापकत्वम्। गरिमा मेरुवद् गुरुत्वम्। लघिमा तूलपिण्डवत् लघुत्वम्। प्राप्तिः अङ्गुल्या चन्द्रस्पर्शः। प्राकाम्यं सत्यसंकल्पत्वम्। ईशित्वं भूतस्रष्टृत्वम्। वशित्वं भूतनियन्तृत्वम् इति विवेकः। तत एव पृथिव्यादिभूतधर्मैः काठिन्यादिभिरनभिघातः योगशरीरस्य। रूपलावण्यबलवज्रसंहननत्वादयश्च कायसंपद्रूपाः काचित् सिद्धयः। इन्द्रियजयः काचित् सिद्धिः। [1]इन्द्रियजयात् मनोगतिवत् देहस्यानुत्तमगतिलाभरूपमनोजवित्वं काचित्. सिद्धिः। देहानपेक्षाणामिन्द्रियाणां, दूरस्थग्राह्यार्थज्ञाने करणत्वं काचित् सिद्धिः[1]। सर्वप्रकृतिविकारवशित्वरूपः प्रधानजयः काचित् सिद्धिः। एताः समाधिजाः सिद्धयो वामदेवमार्गे ज्ञानार्थं प्रवृत्तस्य हठाभ्यासात् भवन्ति।

८७. ननु सिद्धीनां[2] समाधिजत्वेन कथं समाधिरहितानां श्येनादीनामाकाशगमनसिद्धिरिति चेन्मैवम्। जन्मौषधिमन्त्रतपसामपि सिद्धिहेतुत्वात्। तथा च पातञ्जलं सूत्रं – 'जन्मौषधिमन्त्रतपःसमाधिजाः[3]सिद्धयः' इति। जन्मना पक्ष्यादीनामाकाशगमनादिसिद्धिः। औषधविशेषसेवया मण्डव्यप्रभृतीनां, मन्त्रजपेन ध्रुवप्रभृतीनां, तपसा विश्वामित्रप्रभृतीनां सिद्धिः। समाधिजास्तु पूर्वोक्ताः सिद्धयः।

---

1-1. B. Omits.
2. B. Omits.
3. AB. °न्त्रस°; B. °समाधि

८८. जगदीशप्रसादोऽपि समस्तसिद्धिहेतुः । तदुक्तम् –

'या वै साधनसंपत्तिः पुरुषार्थचतुष्टये ।
तया विना तदाप्नोति नरो नारायणाश्रयः ॥'

इति । श्रूयते श्रीगौरीवल्लभकटाक्षवीक्षणेन नन्दीश्वरस्य नरस्यात्वैव देव-शरीरत्वसिद्धिः ।

८९. एताः पूर्वोक्ताः सिद्धयो मोक्षार्थिना नापेक्षितव्याः, तासां मोक्षोपयोगित्वाभावात् । तदुक्तमन्नपूर्णोपनिषदि –

'यस्तु मूढोऽल्पबुद्धिर्वा[1] सिद्धिजालानि वाञ्छति ।
स सिद्धिसाधनैर्योगैः तानि साधयति क्रमात् ॥
द्रव्यमन्त्रक्रियाकालशक्तयः साधु सिद्धिदाः ।
परमात्मपदप्राप्तौ नोपकुर्वन्ति काचन ॥'

इति ।

ननु येषामाकाशगमनादिसिद्धयः सन्ति त एव ज्ञानिन इति चेन्मैवम्, आकाशगमनादेर्ज्ञानिचिह्नत्वाभावात् । तदुक्तं तस्यामेवोपनिषदि-

'जीवन्मुक्तस्य किं लक्ष्म ह्याकाशगमनादिकम् ।'

इत्युपक्रम्य –

'तथा चेन्मुनिशार्दूल तत्र नैव प्रलक्ष्यते ।
अनात्मविद्मुक्तोऽपि नभोविहरणादिकम् ॥
द्रव्यमन्त्रक्रियाकालशक्त्याप्नोत्येव स द्विज ।
नात्मज्ञस्यैष विषय आत्मज्ञो ह्यात्ममात्रदृक् ॥
आत्मनात्मनि संतृप्तो नाविद्यामनुधावति ।
ये ये भावाः स्थिता लोके तानविद्यामयान् विदुः ॥
त्यक्ताविद्यो महायोगी कथं तेषु निमज्जति ।'

इति ।

1. AB. मूलोऽल्प°

९०. तथा च येन केनापि मार्गेण मोक्षार्थिभिः ब्रह्मात्मैकत्वज्ञानमेव संपादनीयम्। येषां पूर्वोक्तसिद्धिवाञ्छाप्यस्ति ते हठाभ्यासेऽपि यतन्तु नाम। तस्माद् ब्रह्मात्मैकत्वज्ञानमेव परमपुरुषार्थरूपमोक्षसाधनमिति सिद्धम्। येषामेतद् ब्रह्मात्मैकत्वज्ञानमस्ति त एव सर्वजीवोत्कृष्टाः। तथा च मनुस्मृतौ –

'भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः।
बुद्धिमत्सु नराः श्रेष्ठाः........'

इत्यारभ्य उत्तरोत्तरं ब्रह्मवित्पर्यन्तं श्रैष्ठ्यमुक्त्वा अनन्तरमुक्तम् –

'ब्रह्मविद्भ्यः परं किञ्चित् न भूतं न भविष्यति।'

इति। अत एव ब्रह्मवित्सु धनादिसमर्पणस्य जगदीशतोषकत्वमुक्तम्।

'यद्येको ब्रह्मविद्भुङ्क्ते तत्र भुङ्क्ते हरिः स्वयम्।
तस्माद् ब्रह्मविदे देयं यत्किञ्चिद्वसु चेत् स्थितम्॥'

इति[1]।

९१. ननु ब्रह्मविदामुदासीनत्वेन उपकारित्वाभावाद् धनादिना तत्पूजनस्य किं फलमिति चेन्मैवम्। धनादिना तत्पूजनस्य स्वाभिलषिततत्तल्लोकावाप्तिरूपविजातीयफलश्रवणात्। तथा च श्रुतिः – 'यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान्। तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः' इति। संविभाति संकल्पयतीत्यर्थः। पुराणेऽप्येतदुक्तम् –

'यं यं कामयते लोकं तं तमुद्दिश्य बुद्धिमान्।
आत्मज्ञं ह्यर्चयेन्नित्यमात्मज्ञ इति हि श्रुतिः॥'

---

1. B. Omits.

इति । उक्तं च –

'दुर्वृत्तो वा सुवृत्तो वा मूर्खः पण्डितविच्च वा ।
ज्ञानाभ्यासरतः पूज्यः किमुत ज्ञानवान्नरः ॥'

इति ।

९२. ते च ब्रह्मविदः कीदृशाचारा इति चेदुच्यते – केचित् विधिनिषेधरहिताः स्वच्छन्दचारिणो भवन्ति । तेषां तथात्वे इमानि प्रमाणवचनानि ।

'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः[1] ।
आत्मन्येव च संतुष्टः तस्य कार्यं न विद्यते ॥'
'वर्णाश्रमवयोऽवस्थाभिमानो यस्य विद्यते ।
तस्यैव च निषेधाश्च विधयः सकला अपि ॥'
'वर्णाश्रमादयो देहे[2] मायया[3] परिकल्पिताः ।
नात्मनो बोधरूपस्येत्येवं तस्य विनिश्चयः ॥'

इत्यादीनि ।

केचित्तु ब्रह्मात्मैकत्वज्ञानवन्तोऽपि लोकसंग्रहार्थं कर्मापि कुर्वन्ति । तेषां तथात्वे इमानि प्रमाणवचनानि ।

'सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥'
'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो[4] जनः[5] ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥'

---

1. B. मानवाः
2. AB. देह
3. AB. मायापरि°
4. A. °तरे ; B. देव नरे
5. AB. जानाः

'न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम् ।
जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥'
'बुद्धाद्वैतस्वतत्त्वस्य यथेष्टाचरणं यदि ।
शुनां तत्त्वदृशां चैव को भेदोऽशुचिलक्षणे ॥'

इत्यादीनि ।

अन्ये तु साक्षात्कृतब्रह्मतत्त्वा अपि ब्रह्मप्रतिपादकवेदान्तचिन्तनमेव सदा कुर्वन्ति । तेषां तथात्वे इदं प्रमाणम् –

'दद्यान्नावसरं कंचित् कामादीनां मनागपि ।
आ सुप्तेरा मृतेः कालं नयेद्वेदान्तचिन्तया ॥'

इति ।

अपरे तु समाधिमेव सदा कुर्वन्ति । तेषां तथात्वे इदं प्रमाणम्–

'योऽन्तस्सुखोऽन्तरारामः तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥'

इति ।

एते च एकस्मिन्नपि विदुषि कालभेदेन भवेयुः । तदुक्तम् –

'विद्वांश्चेत् तादृशां मध्ये तिष्ठेत् तदनुरोधतः ।
कायेन मनसा वाचा करोत्येवामलाः क्रियाः ॥
तेषां मध्ये बुभुत्सूनां यदा तिष्ठेत् तदा पुनः ।
बोधायैषां क्रियाःसर्वा दूषयेत् त्यजतु स्वयम् ॥
[अ]विद्वदनुसारेण प्रतिबुद्धस्य[1] युज्यते ।
स्तनन्धयानुसारेण वर्तते तत्पिता यथा ॥'

इति ।

1. B. बद्धस्य

९३. ननु ब्रह्मविदः[1] हितकरणे निषिद्धाचरणे च स्वर्गनरकादिप्राप्तिः स्यादिति चेन्मैवम्। तेषां ज्ञानोत्पत्त्यनन्तरं कृतयोः पुण्यपापयोः लेपासंभवात्। तथा च श्रुतिः – 'यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' इति। 'न वर्धते कर्मणा नो कनीयान्' इति च।

९४. ननु मास्तु तेषां भाविपुण्यापुण्यलेपः। किं त्वनेकजन्मसंचितपुण्यापुण्यकर्मणां सत्त्वात् पुनर्जन्मप्राप्तिः[2] स्यादिति चेन्मैवम्। तेषां यत्कालावच्छेदेन ब्रह्मात्मैकत्वज्ञानमुत्पन्नं तत्कालावच्छेदेनैव संचितकर्मणां विनष्टत्वात्। तथा च श्रुतिः– 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे', 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इत्याद्या। अस्मिन्नर्थे स्मृतिरपि –

'यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा॥'

इति। प्रारब्धकर्मणां फलभोगेनैव क्षयः।

९५. ननु संचितस्येव प्रारब्धस्यापि कर्मणो ज्ञाननाश्यत्वमस्तीति चेन्मैवम्। प्रारब्धस्यापि ज्ञाननाश्यत्वे ज्ञानोत्पत्तिसमकाल एव ज्ञानिनां देहपातः प्रसज्येत। न चेष्टापत्तिरिति वाच्यम्; जीवन्मुक्तत्वप्रतिपादकश्रुतिस्मृतिविरोधप्रतिपत्तेः[3], गुरुशिष्यभावलेपापत्तेश्च।

९६. तथा च प्रारब्धकर्मणः भोगेनैव क्षये सति लिङ्गशरीरस्य स्वरूपेणैव लयो भवेत्। तथा सत्युपाध्यभावात् परब्रह्मात्मनावस्थानलक्षणं विदेहकैवल्याख्यं मोक्षमत्रैव प्रतिपद्यन्ते। तेषां न पुनरुत्पत्तिः जन्मकारणकर्माभावात्। नापि लोकान्तरगमनं, सर्वगतब्रह्मसंपन्नत्वात्। तथा च

1. B. ⁰विद्
2. A. ⁰प्राप्तिरिति
3. B. ⁰स्मृतिप्रति⁰

श्रुतयः – 'अत्रैव समवलीयन्ते', 'न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति', 'अथ मर्त्योऽमृतो भवत्यत्र[1] ब्रह्म समश्नुते', 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम', 'ब्रह्म वेद ब्रह्मैव भवति' इत्याद्याः । अस्मिन्नर्थे स्मृतिरपि –

'नोत्क्रामन्ति मुनेः प्राणा व्यापी सर्वगतो हि सः ।
तेन व्याप्तमिदं सर्वं कुत उत्क्रम्य यास्यति ॥'

इत्याद्या । एवं निर्गुणं ब्रह्म देहत्रयव्यतिरिक्तप्रत्यगात्मत्वेन साक्षात्कृतवतां विदुषां विदेहकैवल्याख्यमोक्षप्रकारोऽभिहितः ।

९७. मोक्षस्यात्मरूपत्वेन नित्यप्राप्तत्वात् कथं तस्य प्राप्तिरिति चेत् सत्यम् । अत्र मोक्षस्य प्राप्तिर्नाम कण्ठचामीकरन्यायेन नित्यप्राप्तस्यैव प्रत्यगात्माभिन्नब्रह्मरूपस्य तस्याप्राप्तत्वभ्रमनिवृत्तिः । तथा च नित्यसिद्धस्यैव मोक्षस्य 'तत्त्वमसि', 'अहं ब्रह्मास्मि' इत्यादिश्रुतिरूपप्रमाणजन्यब्रह्मात्मैकत्व-विज्ञानव्यङ्ग्यत्वं वक्तव्यम् । तदेव विज्ञानव्यङ्ग्यत्वं विज्ञानफलतयोपचर्यत इति द्रष्टव्यम् ।

९८. ये तु निर्गुणब्रह्म प्रत्यगात्मत्वेन साक्षात्कर्तुमशक्ताः तैः दहरवैश्वानरादि[2]सगुणोपासनं कार्यम्[2] । सगुणब्रह्मोपासनमपि चित्तैकाग्र्य-द्वारा निर्गुणब्रह्मसाक्षात्कारे कारणम् । तदुक्तम् –

'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥
वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ।
तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम् ॥'

---

1. B. भवेत्यत्र
2-2. B. Omits.

इति। तेषां च प्राणपर्यन्तमुपासनां कृतवतामुत्क्रमणात् पूर्वमुपास्य-साक्षात्कारेण पूर्वकृतनिखिलपुण्यपापविधूननपूर्वमर्चिरादिमार्गद्वारा ब्रह्मलोकं गतानां तत्र संकल्पमात्राद् उत्पन्नसकलभोगानुभवानन्तरं तत्रैव तत्त्वमस्यादि महावाक्योत्थब्रह्मात्मैकत्वसाक्षात्काराणां द्विपरार्धावसाने ब्रह्मणा सह मुक्तिः स्यात्। तदुक्तम् –

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥'

इति।

९९. केचित्तु ब्रह्मात्मैकत्वमसहमानाः श्रुतीनामुपक्रमोपसंहार-परामर्शैः ब्रह्मात्मनोर्भेदपरतया व्याख्यानं कृत्वा तत्त्वमस्यादिवाक्यानामपि भेदपरतयैव व्याख्यानं कुर्वन्ति। ते च द्विविधाः – मध्वमतानुसारिणो रामानुजमतानुसारिणश्चेति।

१००. माध्वास्तु तत्त्वमसीत्यत्र तत्त्वंपदार्थयोः सामानाधि-करण्यमसहमानाः तस्यार्थवर्णनमेवं कुर्वन्ति – यथा[1] 'गायत्रीं छन्दसां माता' इत्यत्र विभक्तिव्यत्यासेन प्रथमार्थे द्वितीया, तथा 'तत्त्वमसि' इत्यत्रापि चतुर्थ्या तस्मै त्वमर्पणीय इत्ययमर्थः स्वीकार्यः। पञ्चम्या वा तस्मात् त्वमुत्पन्नोऽसीत्ययमर्थः स्वीकार्यः। षष्ठ्या वा तस्य त्वमसि तत्स्वामि-कोऽसीत्ययमर्थो ग्राह्यः। सप्तम्या वा तस्मिन् त्वमसीति। यद्वा 'अघोरापापकाशिनी' इत्यत्र अपापकाशिनीति पदच्छेदवत्, 'स आत्मा तत्त्वमसि' इत्यत्रापि अतत्त्वमसीति पदच्छेदो भवति। तथा च तत्त्व-मसीति वाक्यं ब्रह्मात्मनोर्भेदप्रतिपादकमेवेति।

१०१. रामानुजमतानुसारिणस्तु यथा 'मनुष्योऽहं' इत्यत्र शरीर-शरीरिभावाभिप्रायकं सामानाधिकरण्यं भवति, एवं 'तत्त्वमसि' इत्यत्रापि तत्त्वंपदार्थयोः शरीरशरीरिभावाभिप्रायकं सामानाधिकरण्यं भवत्विति वदन्ति। किं च निर्गुणब्रह्मात्मैकत्वविज्ञानात् ब्रह्मात्मना अवस्थानलक्षणं मोक्षमसहमानाः

1. B. Omits.

सगुणब्रह्मोपासनादेव कालान्तरे स्वर्गवन्मोक्षो भविष्यतीत्यपि वदन्ति। एतत् सर्वमस्मत्कृतवेदान्तकौस्तुभे समन्वयाधिकरणे विस्तरेणानूद्य सम्यक् निराकृतम्। तेषां भेदोपनिषन्मार्गप्रविष्टत्वात् सगुणब्रह्मनिष्ठत्वाच्च जन्मान्तरेष्वद्वैतश्रद्धाप्राप्तिपूर्वकं क्रमेण निर्गुणब्रह्मात्मैकत्वविज्ञानादेव मोक्षो भविष्यति।

'न हि कल्याणकृत् कश्चिद्दुर्गतिं तात गच्छति।'

इति स्मृतेः।

१०२. ये श्रवणादिना ज्ञानाभ्यासशीलाः तेषां सिद्धिमनधिगतानां मध्ये मध्ये देहपतने सति न दुर्गतिर्भवति। अपि तु ते पुण्यकृतां लोकं गत्वा तत्र चिरकालमुषित्वा पुनश्च भूमौ सत्कुले जन्म प्राप्य संसिद्धौ पूर्ववदेव यत्नं करिष्यन्ति। तथा च स्मृतिः —

'पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते।
नहि कल्याणकृत् कश्चिद्दुर्गतिं तात गच्छति॥
प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीःसमाः।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते॥
अथवा योगिनामेव कुले भवति धीमताम्।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम्॥
तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन॥'

इति।

'यया[1] तु श्रवणे शम्भोर्नामसंकीर्तने स्मृतौ।
क्वचिद्भवेच्चित्तरतिः सा मन्दा परिकीर्तिता॥
गुरुपादेऽन्वहं[2] पूजा लिङ्गे च नियमार्चनम्।
वन्दनं शिवबेरस्य या कारयति वासना॥

1. AB. ये
2. A. ०दे वहं०, B. पादावहं

मध्यमा भक्तिरेषा स्यात् सालोक्यादिप्रदायिनी ।
यया कैङ्कर्यतात्पर्यं सर्वं त्यक्त्वा महेश्वरे ॥
सख्यं करोति सततमविनाभावलक्षणम् ।
आत्मार्पणं शरण्येशे सोत्तमा भक्तिरुच्यते ॥

........ ........ ........

जन्तोर्नवविधा भक्तिरुत्तरोत्तरमुत्तमा ॥'

इति स्कान्दस्थशिवभक्तविलासोक्तनवविधशिवभक्तिं कुर्वन्ति । ते स्वेच्छास्वीकृतहरिहरादिदिव्यमङ्गलमूर्तिरूपश्रीजगदीश्वरभक्तिमाहात्म्यात् तत्तद्भक्त्यनुरूपं सालोक्यादिकं फलं प्राप्य अन्ते आत्मार्पणरूपामुत्तमां भक्तिं प्राप्य विदेहकैवल्याख्यं मोक्षं प्राप्नुवन्ति । तदुक्तं भक्तविलासे –

'भोगाय मन्दा कथिता सालोक्याप्त्यै च मध्यमा ।
अपवर्गप्रदा भक्तिरुत्तमा दुर्लभा नृणाम् ॥'

इति । तथा चात्मार्पणाख्या उत्तमा भक्तिर्ब्रह्मात्मैकत्वज्ञानरूपेति गम्यते । तदुक्तं तत्रैव –

'मार्कण्डेयोपमन्युश्रीकान्तनन्दीघटोद्भवैः[1]
उत्तमा सेव्यते भक्तिश्चरमे जन्मनि स्थितैः ॥'

इति । एतच्चास्मत्कृतभक्तमाहात्म्यसंग्रहे विस्तरेणोपन्यस्तम् ।

१०३. ये तु फलाभिसंधिं विना ब्रह्मार्पणबुद्ध्यैव यज्ञदानतपस्तीर्थाटनादिकं कुर्वन्ति त इह जन्मनि जन्मान्तरेषु वा क्रमेण चित्तशुद्धिं प्राप्य विविदिषोत्पत्तिद्वारा श्रवणमनननिदिध्यासनपूर्वकं ब्रह्मात्मैकत्वविज्ञानं प्राप्य मुक्तिं प्राप्नुवन्ति । तथाच श्रुतिः – 'तमेतं[2] वेदानुवचनेन ब्राह्मणा विविदिषन्ति, यज्ञेन दानेन तपसानाशकेन' इति । उक्तं च –

---

1. B. °नटीघ°
2. B. तमेकं

'जन्मान्तरतपोयोगात् पुण्यतीर्थनिषेवणात् ।
सत्पात्रे द्रव्यदानाच्च ब्रह्मज्ञानमवाप्नुयात् ॥'

इति ।

१०४. ये तु स्वर्गादिफलकामनया यज्ञादिकर्म कुर्वन्ति ते धूमादिमार्गेण स्वर्गलोकं गत्वा तत्र विजातीयदिव्यफलभोगेन पुण्यक्षये सति पुनर्भूमौ कर्मशेषानुसारेण जन्म प्राप्नुवन्ति । तेषां पुण्यकर्मशेषश्चेत् ब्राह्मणादिजन्मप्राप्तिः । पापकर्मशेषश्चेत् श्वादिजन्मप्राप्तिः । तथा च श्रुतिः – 'रमणीयचरणा रमणीयां योनिमापद्येरन्, ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । कपूयचरणाः कपूयां योनिमापद्येरन्, श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा' इति । अस्मिन्नर्थे स्मृतिरपि –

'त्रैविद्या[1] मां सोमपाः पूतपापा[2] यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान् ॥
ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥'

इति । तेषामपि बहुषु ब्रह्मकल्पेषु एवं संसरतां कस्मिंश्चित् कल्पे कस्माच्चित् पुण्यवशात् ययातिमहीपतेरिव वनिताविषयभोगात् विरक्तिरागता चेदनन्तरं फलाभिसंधिं विना ब्रह्मार्पणबुद्ध्या यज्ञदानतपःपुण्यतीर्थस्नानकरणादिपूर्वकं शुद्धान्तःकरणानां विविदिषोत्पत्तिद्वारा सद्गुरुमुखात् लब्धश्रुत्यन्तश्रवणतदर्थमनननिदिध्यासनपूर्वकम् । उत्पन्नब्रह्मात्मैकत्वसाक्षात्कारद्वारा भवेदेव मोक्षः ।

---

1. AB. त्रयी
2. B. पापैः

१०५. ये तु प्रतिषिद्धकर्मानुष्ठातारः पापिनः ते रौरवादिनरकविशेषेषु तत्तत्पापोचिततीव्रदुःखमनुभूय[3] नरकप्रदपापक्षये सति पूर्वकृतपापपुञ्जानुसारेण भूमौ स्थावरकृमिमत्स्यादिजन्म प्राप्य असकृज्जन्ममरणाभ्यां संसरन्ति। तथा च श्रुतिः – 'असकृदावृत्तानि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्' इति। एवमसकृत् कुत्सितजन्ममरणपरम्पराभिः संसरतां केषांचित् पापिनां कदाचित् पूर्वकृतपुण्यलेशवशात् नवविधजन्मक्रमेण मोक्षो भविष्यति। तदुक्तं विष्णुपुराणे –

'स्थावराः कृमयोऽब्जाश्च पक्षिणः पशवो नराः।
धार्मिकास्त्रिदशास्तद्वत् मोक्षिणश्च यथाक्रमम् ॥'

इति। अयं तु नवविधजन्मक्रमः प्रायिक एव। व्युत्क्रमेणापि तेषां मनुष्यजन्मप्राप्तिसंभवात्। तदुक्तमादित्यपुराणे –

'व्युत्क्रमेणापि मानुष्यं प्राप्यते पुण्यगौरवात्।
विचित्रा गतयः पुसां कर्मणां गुरुलाघवैः ॥'

इति।

१०६. ननु अतीतानन्तवर्तमानेषु बहुषु ब्रह्मकल्पेषु ब्रह्मात्मैकत्वविज्ञानात् क्रमेण जीवेषु मुक्तिं गतेषु सत्सु मुक्तानां पुनरुत्पत्त्यभावात् पूर्वपूर्वकल्पापेक्षया उत्तरोत्तरकल्पेषु जीवह्रासक्रमेण कस्मिंश्चित् कल्पे निश्शेषं जीवानां ह्रासे सति ब्रह्माण्डे जीवाभावप्रसङ्ग इति चेन्मैवम्। जीवानामनन्तत्वात् प्रतिकल्पमुच्यमानेष्वपि जीवेषु ब्रह्माण्डे न कदाचिदपि जीवाभावप्रसङ्गः। तदुदाहृतं परिमले श्रीमद्भिरप्पय्यदीक्षितैः – 'अत एव विद्वत्सु मुच्यमानेषु सर्वदा ब्रह्माण्डलोके जीवानामनन्तत्वाद् अशून्यता' इति।

१०७. तथा च यस्मिन् कस्मिंश्चिज्जन्मनि मनुष्यत्वप्राप्तौ तस्मिन्नेव जन्मनि पुरुषैः मोक्षसाधनभूतब्रह्मात्मैकत्वविज्ञानबोधनवेदान्तश्रवणादौ यत्नः

3. A. adds ते

कार्यः । तथा च श्रुतिः – 'इह चेदवेदीदथ सत्यमस्ति न चेदिहा-
वेदीन्महती विनष्टिः' इति । उक्तं च सूतसंहितायाम् –

'दुर्लभं प्राप्य मानुष्यं तत्रापि ब्रह्मविग्रहम् ।
ब्राह्मण्यं च महाविष्णो वेदान्तश्रवणादिना ॥
अतिवर्णाश्रमं रूपं सच्चिदानन्दमव्ययम् ।
यो न जानाति सोऽविद्वान् कदा मुक्तो भविष्यति ॥'

इति । उक्तं च भागवते –

'लब्ध्वा सुदुर्लभमिदं बहुसंभवान्ते
मानुष्यमर्थदमनित्यमपीह धीरः ।
तूर्णं यतेत न पतेदनु मृत्यु धावन्
निःश्रेयसाय [विषयः खलु सर्वतः स्यात्] ॥'

इति

इति श्रीमत्सज्जनबृन्दचरणारविन्द-
निषेविवेदान्तिसीतारामशास्त्रि-
विरचितवेदान्तसारचिन्ता-
मणौ उत्तरभागः
समाप्तः ॥

# ALPHABETICAL INDEX OF THE CITATIONS

| Citation | Source |
|---|---|
| अग्निर्यथैको भुवनं | कठ. २.२.९ |
| अघोरापापकाशिनी | तैसं. ४.५.१.१ |
| अचैतन्यमृदादिस्तु | |
| अजामेकां लोहितशुक्लकृष्णां | श्वेता. ४.५ |
| अजायमानो बहुधा | मुद्गल. ३.१ |
| अज्ञानं नाम मायैषा | सौरसंहिता |
| अज्ञानमावृतिस्तद्वत् | पद. ७.३३ |
| अण्डकोशो बहिरयं | पुराण |
| अण्डानां च सहस्राणां | विष्णुपु. २.७.२७ |
| अत एव विद्वत्सु मुच्यमानेषु | परिमल |
| अत्रैव समवनीयन्ते | बृह. ३.२.११ |
| अथ मर्त्योऽमृतो | बृह. ४.४.७ |
| अथात आदेशो नेति नेति | बृह. २.३.६ |
| अनन्याश्चिन्तयन्तो मां | भगी. ९.२२ |
| अनाद्यविद्यानिर्वाच्या | आत्मबोध. १४ |
| अन्तर्दृक्दृश्ययोर्भेदं | |
| अन्तः प्रविष्टः शास्ता | तैआ. ३.११.२ |
| अन्यथा भानहेतुत्वात् | सूतसंहिता. १.८.१८.२१ |
| अलीनत्वाच्च निद्रैषा | पद. ११.९९ |
| अवस्थान्तरतापत्तिः | पद. १३.८ |
| अशब्दमस्पर्शमरूपमव्ययम् | कठ. १.३.१५ |
| असकृदावृत्तीनि भूतानि | छान्दो. ५.१०.८ |
| अस्ति ब्रह्मेति चेद्वेद परोक्षज्ञानं | वराहो. २.४१ |
| अस्तिब्रह्मेति चेद्वेद सन्तमेनं | तैउ. २.६ |
| अस्ति भाति प्रियं रूपं | दृदृवि. २० |

| | |
|---|---|
| अस्य सोम्य महतो वृक्षस्य | छान्दो. ६.११.१ |
| अहं ब्रह्मास्मि | बृह. १.४.१० |
| अहं ब्रह्मेति चेद्वेद | वराहो. २.४१ |
| अहिंसा सत्यमस्तेयं | वराहो. ५.१२ |
| अहिंसासत्यास्तेयब्रह्मचर्या | पायो. २.३० |
| आत्मा वा अरे द्रष्टव्यः | बृह. २.४.५ |
| आत्मा वा इदमेक | ऐत. १.१ |
| आदिमध्यावसानेषु | पद. ७.६२ |
| आरम्भवादिनोऽन्यस्मात् | पद. १३.७ |
| इन्द्रियाणां विचरतां | स्कान्दपुराण |
| इन्द्रो मायाभिः पुरुरूप ईयते | बृह. २.५.१५ |
| इममेवात्मानं द्वेधा | बृह. १.४.३ |
| इह चेदवेदीदथ | केन. २.५ |
| उद्‌गारादिगुणः प्रोक्तो | पुराण |
| उपादानं त्रिधा भिन्नं | पद. १३.६ |
| एकं सद्विप्रा बहुधा वदन्ति | ऋसं. १.१६४.४६ |
| एकं सन्तं बहुधा कल्पयन्ति | ऋ.सं १०.११४.५ |
| एक एव तु भूतात्मा | त्रिता. ५.१२ |
| एक एव शिवः साक्षात् | |
| एको देवः सर्वभूतेषु | श्वेता. ६.११ |
| एष सर्वेश्वर एष सर्वज्ञ | रामो. २.४ |
| एष ह्येव साधु कर्म कारयति | कौउ. ३.८ |
| एषा माहेश्वरी शक्तिः | सूतसंहिता. १.८.२१ |
| कारणे सत्त्वमानन्द | विद्यारण्य |
| कार्योपाधिरयं जीवः | त्रिना. ४.८ |
| कुतर्कवासना लोक | |
| क्षीणे पुण्ये मर्त्यलोकं विशन्ति | भगी. ९.२१ |
| क्षीयन्ते चास्य कर्माणि | मुण्ड. २.२.९ |
| गायत्रीं छन्दसां माता | तैआ. १०.२६.१ |
| घट्टकुट्यां प्रभातम् | न्याय. Cf. परिमल. ३.१,२४ |

| | |
|---|---|
| चतुरशीति लक्षाणि | गरुडपु. २.२.२ |
| जगत्प्रतिष्ठा देवर्षे | Cf. अभा. २.३.१४ |
| जन्मान्तरतपोयोगात् | |
| जन्मौषधिमन्त्रतपः | पायो. ४.१ |
| जीवन्मुक्तस्य किं लक्ष्म | अपू. ४.१ |
| जीवेशावाभासेन करोति माया | नृउ. ९.५ |
| ज्ञातृज्ञानज्ञेयभेदः | आत्मबोध. ४१ |
| ज्ञानप्रसादेन विशुद्धसत्त्वः | मुण्ड. ३.१.८ |
| तत्र प्रत्ययैकतानता ध्यानं | पायो. ३.२ |
| तत्त्वबोधः प्रधानं स्यात् | पद. ६.२८१ |
| तत्त्वमसि | छान्दो. ६.८.७ |
| तत्त्वमस्यादिवाक्येषु | वाक्यवृत्ति. ४८ |
| तत्त्वमस्यादि वाक्यं च | वाक्यवृत्ति. ४२ |
| तदभिध्यानादेव तु तल्लिङ्गात् सः | ब्रसू. २.३.१३ |
| तदात्मानं स्वयमकुरुत | तैउ. २.७ |
| तदा द्रष्टुः स्वरूपेऽवस्थानं | पायो. १.३ |
| तदापीतेः संसारव्यपदेशात् | ब्रसू. ४.२.८ |
| तदा विद्वान् पुण्यपापे | मुण्ड. ३.१.३ |
| तदेवार्थमात्रनिर्भासं | पायो. ३.३ |
| तदैक्षत | छान्दो. ६.२.३ |
| तद्यथेह कर्मजितो लोकः | छान्दो. ८.१.६ |
| तद्विद्धि प्रणिपातेन | भगी. ४.३४ |
| तपस्तप्त्वासृजद्यं तु | मनु. १.३३ |
| तमेतं वेदानुवचनेन | बृह. ४.४.२२ |
| तमेव विदित्वातिमृत्युमेति | श्वे. ३.८. |
| तरति शोकमात्मवित् | छान्दो. ७.१.३ |
| तस्माद्वा एतस्मादात्मनः | तैउ. २.१ |
| तस्मान्मुमुक्षुः श्रद्धावान् | |
| तस्मै स विद्वानुपसन्नाय | मुण्ड. १.२:१३ |
| ते प्रातिभादयः पुरुषदर्शने | पायोभा. ३.३७ |

| | |
|---|---|
| अयमन्तरङ्गं पूर्वेभ्यः | पायो. ३.७ |
| अयोऽप्यत्यन्तपक्वाश्चेत् | पद. ६.२८२ |
| त्रैविद्या मां सोमपाः पूतपापाः | भगी. ९ २०. |
| त्वमेकोऽसि बहूननुप्रविष्टः | चित्यु. १४.३ |
| दध्यान्नावसरं क्वचित् | |
| दिने दिने च वेदान्त | |
| दुर्लभं प्राप्य मानुष्यं | सूतसंहिता. ७.७२ & ७३ |
| दुर्वृत्तो वा सुवृत्तो वा | |
| देशबन्धश्चित्तस्य धारणा | पायो. ३. १ |
| देहात्मवत् परात्मत्वबोधो | |
| दैवी ह्येषा गुणमयी | भगी. ७.१४ |
| दोषदृष्टिर्जिहासा च | पद. ६.२७८ |
| द्वा सुपर्णा सयुजा | मुण्ड. ३.१.१ |
| द्वैतरूपं तु यद्वस्तु | सौरसंहिता |
| ध्यातृध्याने परित्यज्य | पद. १.५५ |
| न कृत्स्नब्रह्मवृत्तिः सा | पद. २.५४ |
| न च पुनरावर्तते | छान्दो. ८.१५.१ |
| न तस्य कार्यं करणं च | श्वे. ६.८ |
| न तस्य प्राणा उत्क्रामन्ति | बृह. ४.४.६ |
| न बुद्धि भेदं जनयेदज्ञानां | भगी. ३.२६ |
| न हि कल्याणकृत् कश्चित् | भगी. ६.४० |
| निरंशेऽप्यस्त्यसौ व्योम्नि | पद. १३.९ |
| निर्विशेषं परं ब्रह्म | |
| नेह नानास्ति किञ्चन | कठ. २.१.११ |
| नोत्क्रामन्ति मुनेः प्राणाः | Cf. प्रकटार्थविवरण. ६.२.१३ |
| पञ्चप्राणमनोबुद्धि° | आत्मबोध. १३ |
| पञ्चीकृतमहाभूत° | आत्मबीध. १२ |
| परास्य शक्तिर्विविधैव श्रूयते | श्वे. ६.८ |
| परीक्ष्य लोकान् कर्मचितान् | मुण्ड. १.२.१२ |
| परोक्षा चापरोक्षेति | पद. ६.१५ |

| | |
|---|---|
| पार्थ नैवेह नामुत्र | भगी. ६.४० |
| पुण्येन पुण्यं लोकं नयति | प्रश्न. ३.७ |
| पुण्यः पुण्येन कर्मण | बृह. ४.४.५ |
| पुनस्तैजसभोगाय | |
| पूर्णे बोधे तदन्यौ द्वौ | पद. ६.२८४ |
| प्रशान्तचित्ताय जितेन्द्रियाय च | उसा. १६.७२ |
| प्राधान्येन विराडात्मा | |
| बुद्धाद्वैतस्वतत्त्वस्य | नैसि. ४.६२ |
| ब्रह्मणा सह ते सर्वे | Cf. ब्रसूभा. ३.३.३२; ४.३-११ |
| ब्रह्मणो मूर्तयोऽनन्ताः | |
| ब्रह्म वा इदमग्र आसीत् | बृह. १.४.१० |
| ब्रह्मविदाप्नोति परम् | तैउ. २.१ |
| ब्रह्मविच्चात्मसत्यत्वं | |
| ब्रह्मविद्भ्यः परं किञ्चित् | मनु. १. प्रक्षिप्तश्लोक-१० |
| ब्रह्म वेद ब्रह्मैव भवति | मुण्ड. ३.२.९ |
| ब्रह्मात्मनोः शोधितयोः | विचू. ४२८ |
| ब्रह्मादयो यत्कृतसेतुपालाः | |
| ब्रह्मैव स्वाविद्यया संसरति | Cf. बृह. २.१.२० |
| भयादस्याग्नि स्तपति | कठ. २.३.३ |
| भीषास्माद्वातः पवते | तैउ. २.८ |
| भूतनां प्राणिनः श्रेष्ठाः | मनु. १.९६ |
| भोगाय मन्दा कथिता | शिभवि. १.४३ |
| मायाशक्तिः कल्पिका | पद. १३.१० |
| मायाख्यायाः कामधेनोः | पद. ६.२३६ |
| मायाबिम्बो वशीकृत्य | |
| मार्कण्डेयोपमन्युश्री | शिभवि. १.४७ |
| मृत्योः स मृत्युमाप्नोति | कठ. २.१.१० |
| यं यं लोकं मनसा संविभाति | मुण्ड. ३.१.१० |
| यं यं कामयते लोकं | |
| यतो वा इमानि भूतानि जायन्ते | तैउ. ३.१ |

| | |
|---|---|
| विपर्ययेण तु क्रमोऽतः | ब्रसू. २.३.१४ |
| विराट् स्वायंभुवं विप्राः | |
| वेदान्तानामशेषाणां | पद. ७.१०१ |
| वैराग्यबोधोपरमाः | पद. ६.२७६ |
| वैराग्योपरती पूर्णे | पद. ६.२८३ |
| व्युत्क्रमेणापि मानुष्यं | |
| शक्तिरस्तीश्वरी काचित् | |
| शक्तिः शक्तात् पृथङ् नास्ति | |
| शान्तो दान्त उपरतस्तितिक्षुः | बृह. ४.४.२३ |
| शारीरं केवलं कर्म | भगी. ४.२१ |
| शुकश्च वामदेवश्च | वराहो. ४.३६ |
| शौचसन्तोषतपस्स्वाध्याय | पायो. २.३२ |
| श्रोतव्यो मन्तव्यो निदिध्यासितव्यः | बृह. २.४.५ |
| संसर्गो वा विशिष्टो वा | वाक्यवृत्ति, ३८-४१ |
| स ईक्षत | ऐत. ३.११ |
| स एव मायापरिमोहितात्मा | कैव. १.१२ |
| सक्ताः कर्मण्यविद्वांसो | भगी. ३.२५ |
| स तपोऽतप्यत | तैउ. २.६ |
| सत्यं ज्ञानमनन्तं ब्रह्म | तैउ. २.१.१ |
| सत्त्वं रजस्तम इति | भगी. १४.५ |
| सदेव सौम्येदमग्र आसीत् | छान्दो. ६.२.१ |
| समाधिः संविदुत्पत्तिः | |
| सर्वस्य वशी सर्वस्येशानः | बृह. ४.४.२२ |
| सर्वाणि भूतान्यन्तरो | बृह. ३.७.१५ |
| स वै शरीरी प्रथमः | Cf. ब्रसूभा. ३.३.१६ |
| स समानः सन्नुभौ लोकौ | बृह. ४.३.७ |
| सूर्यो यथा सर्वलोकस्य | कठ. २.२.११ |
| सोऽकामयत | तैउ. २.६ |
| स्थानात् स्थानात् दश | विष्णुपु. ६.३.४ |
| स्थावराः क्रमयोऽब्जाश्च | विष्णुपु. २.६.३२ |

स्यात् पञ्चीकृतभूतोत्थो — पद. १.३४
स्वस्तिकं गोमुखं पद्मं
हिरण्यगर्भरूपं यः
हिरण्यगर्भो नाम मूर्तित्रयादन्यः — वेप.विषय.